।। श्रीराधासर्वेश्वरो जयति ।।



।। श्रीभगवन्निम्बार्काचार्याय नमः ।।

श्रीभगवन्निम्बार्कमहामुनीन्द्रचरणारविन्दचञ्चरीक

श्रीगौरमुखाचार्य विनिर्मितं

# श्रीनिम्बार्कसहस्रनामस्तोत्रम्



CC-0. In Public Domain. Digtized by Muthulakshmi Research Academy

जगद्गुरु-श्री भगवन्निम्बार्काचार्य

❐ सम्पादक :

रसिक मोहन शरण शास्त्री

जयकिशोरशरण

❐ प्रकाशक :

मदनमोहनशरण पुजारी

श्री "श्रीजी" मन्दिर, वृन्दावन

❐ प्रकाशन तिथि :

फाल्गुन कृष्ण विजया एकादशी

वि. सं. २०५७

❐ प्रथम संस्करण :

१००० प्रतियाँ

❐ न्यौछावर :

चार रुपया मात्र

❐ मुद्रक :

प्रेम कम्प्यूटर प्रेस

३०३, पत्थरपुरा, वृन्दावन

फोन : (०५६५) ४४४९७२

CC-0. In Public Domain. Digtized by Muthulakshmi Research Academy

श्रीभगवन्निम्बार्कमहामुनीन्द्रचरणारविन्दचञ्चरीक
श्रीगौरमुखाचार्य विनिर्मितं

अथ

## श्रीनिम्बार्कसहस्रनामस्तोत्रप्रारम्भः

अनिरुद्धः सदा त्राता निम्बार्कः पुरुषार्थवृट्।
कृपाचारसुधावृष्ट्या निगमौघप्रवर्तकः ।। १ ।।
त्रेतायुगे गत–प्राये नैमिषारण्यवासिनः।
आराधनाय कृष्णस्य विप्रा गौरमुखादयः ।। २ ।।
बहुकालं तपस्तप्त्वा नारायण–परायणाः।
ध्रुवमध्वरमाराध्यारेभिरे ते मखान्तरम् ।। ३ ।।
नीयमाने मखे तस्मिन् विघ्नदा बहवोऽभवन्।
द्वेषिभिर्ध्वंसिते यज्ञे दैत्यैः सत्कदनप्रियैः ।। ४ ।।
तपोयोगसमावृत्त्या ऋषयः कृष्णयाजिनः।
मेरुप्रस्थपुरीं यां तं ब्रह्माणं शरणं ययुः ।। ५ ।।
गत्वा योगबलेनैवमुपद्रवं निवेदयन्।
चतुर्मुखो द्विजाध्यक्षो निवेदितमुपद्रवम् ।। ६ ।।
चिन्तयन्मनसा कृष्णं समाधौ शरणं ययौ।
विष्णुप्रस्थापितं चक्रं हृद्योतं कमलोद्भवः ।। ७ ।।

CC-0. In Public Domain. Digtized by Muthulakshmi Research Academy

पश्यन्नुन्मील्याक्षं बहिस्तदवस्थं ददर्श ह।
प्रेषयामास विप्रांस्तान् सिद्धार्थान्पुनरप्यनु ।। ८ ।।
स्वकं यागं समासाद्य त्वरावारितविघ्नकम्।
नेमिस्पंर्शसमृद्धश्चावर्तयश्चक्रिरे पुनः।। ९ ।।
कृतज्ञा निष्क्रियां कर्तुं स्तावयामासुर्नामिभिः।
चक्रं सुदर्शनं साक्षाद् देदीप्यमानमात्मवत्।।१०।।
स्तवाय प्रेषितो विप्रैर्गौरमुखो मुनीश्वरः।
निम्बार्काख्यसहस्रेण संस्तोतुमुपचक्रमे।। ११ ।।
सुदर्शन! महाबाहो! कोटिसूर्यसमप्रभ!।
अज्ञानतिमिररान्धानां विष्णोर्मार्गं प्रदर्शय।।१२।।
इति सम्प्रार्थितः पित्रा ब्रह्मणा हितकारिणा।
अज्ञानतिमिरान्धानां सम्प्रदायसुदृष्टये।। १३ ।।
तव नामसहस्रेण स्तोतुमिच्छामि नित्यदा।
पालितानां सनाथानां तदभिधातुमर्हसि।।१४।।
एवं सम्प्रार्थितो विप्रैः सुदर्शन उवाच ह।
निम्बार्को ह्यनिरुद्धो वै निम्बार्को वै चतुस्सनः।।१५।।
निम्बार्को नारदश्चैव निम्बार्कोहं सुदर्शनः।
नैम्बार्का वैष्णवाः सर्वे सम्प्रदायानुवर्तिनः।।१६।।

CC-0. In Public Domain. Digtized by Muthulakshmi Research Academy

इति बुद्ध्या समाज्ञेयं मम नामसहस्रकम्।
गुह्याद् गुह्यतरं दिव्यं राधाकृष्णपदप्रदम्।। १७।।
ॐ अस्य श्रीनिम्बार्कसहस्राख्याय नमोस्तु ते।
ऋषिर्गौरमुखश्छन्दोऽनुष्टुब्निम्बार्क एव तु।।१८।।
देव: सुदर्शनो बीजं शक्ति: पुराणमेव च।
विततं कीलकं चैव पवित्रं कवचं तथा।।१९।।
चक्रमस्त्रं मनुस्त्वेवं षडक्षर उदाहृत:।
द्योवन्यन्तर्नराकारमिति ध्यानं प्रकीर्तितम्।। २०।।
निम्बार्कप्रीत्यर्थे जपे विनियोग: समीरित:।
इति संकल्प्य चर्ष्याद्यान् स्वस्वाङ्गेषु क्रमान्न्यसेत्।।२१।।
शीर्ष्यास्यहृद्गुह्यपादसर्वाङ्गसन्धिदिक्षु च।
हार्द्दे बाह्याभ्यन्तरे चतुर्थीन्नमोन्तकांस्तथा।। २२।।
नमो निम्बार्कायोमिति मन्त्रं षडक्षरं विदु:।
अङ्गुलीतलपृष्ठेषु ङेद्विवचोनमोन्तिषु।। २३।।
क्रमान्न्यसेदेकैकशो द्वितीयान्तान्षडक्षरान्।
नम आद्यन्तेष्वङ्गेषु द्वितीयान्तान्षडक्षरान्।। २४।।
हृदयं शिर: शिखा कवचनेत्रत्रयास्त्रत:।
नम:स्वाहावषट्हुंवौषड्फडिति उपन्यसेत्।। २५।।

CC-0. In Public Domain. Digtized by Muthulakshmi Research Academy

## अथ ऋष्यादिन्यासः

ॐ श्रीगौरमुखाय ऋषये नमः शीर्ष्णि।
ॐ अनुष्टुप्छन्दसे नमः आस्ये।
ॐ श्रीनिम्बार्काय देवतायै नमो हृदि।
ॐ सुदर्शनाय बीजाय नमो गुह्ये।
ॐ पुराणाय शक्तये नमः पादयोः।
ॐ वितताय कीलकाय नमः सर्वाङ्गे।
ॐ पवित्राय कवचाय नमः सन्धिषु।
ॐ चक्राय अस्त्राय नमो दिक्षु।
ॐ नमो निम्बार्काय बाह्याभ्यन्तरतयोः।

## अथ करन्यासः

ॐ नं अङ्गुष्ठाभ्यां नमः।
ॐ मों तर्जनीभ्यां नमः।
ॐ निं मध्यमाभ्यां नमः।
ॐ बां अनामिकाभ्यां नमः।
ॐ कां कनिष्ठिकाभ्यां नमः।
ॐ यों करतलकरपृष्ठाभ्यां नमः।

CC-0. In Public Domain. Digtized by Muthulakshmi Research Academy

### अथ हृदयादिन्यासः

ॐ नं हृदे नमः।

ॐ मों शीर्ष्णे स्वाहा।

ॐ निं शिखायै वषट्।

ॐ बां कवचाय हुम्।

ॐ कां नेत्रत्रयाय वौषट्।

ॐ यों अस्त्राय फट्।

### अथ सन्धिन्यासः

ॐ नं नमो गुल्फयोः।

ॐ मों नमो जानुनोः।

ॐ निं नमः उरुमूलयोः।

ॐ बां नमो बाहुमूलयोः।

ॐ कां नमः कूर्परयोः।

ॐ यों नमो मणिबन्धयोः।

### अथ दिङ्न्यासः

ॐ नं नमः प्राच्याम्।

ॐ मों नमो दक्षिणस्याम्।

ॐ निं नमः प्रतीच्याम्।

CC-0. In Public Domain. Digtized by Muthulakshmi Research Academy

ॐ बां नमः उदीच्याम्।
ॐ कां नमः ऊर्ध्वायाम्।
ॐ यों नमः अधरायाम्।

## अथ ध्यानम्

कालचक्रमयं ध्यायेन्निम्बार्कगुरुमीश्वरम्।
द्वादशमासतीक्ष्णारं कालमूर्तिधरं विभुम्।। २६।।
चातुर्मास्यत्रयाकारवलयत्रयभासितम्।
ऋतुरूपषट्कोणमयनद्वयविराजितम्।। २७।।
द्योवन्यन्तर्नराकारं[1] स्वस्तिकासनसंस्थितम्।
तप्तमुद्राधरं दिव्यमुपदिशन्तमात्मानम्।। २८।।
देदीप्यमानवपुषं तप्तहाटकसन्निभम्।
शुक्लोत्तरीयमावासं पञ्चसंस्कारसंयुतम्।। २९।।
तुलसीमालया युक्तं सततं कण्ठलग्नया।
पुण्डरीकविशालाक्षं सूर्यकोटिललाटकम्।। ३०।।
संहृष्टपुष्टसर्वाङ्गं धृतोर्ध्वसमपुण्ड्रकम्।
आजानुभुजसंशुद्धं प्रसन्नमुखमण्डलम्।। ३१।।

---

१. द्योवन्यन्तर्नतराकारं द्यवि=परमव्योमनि। वनिर्वनम्। नर इवाकारः, वस्तुतः भगवान् [illegible]

CC-0. In Public Domain. Digtized by Muthulakshmi Research Academy

नैसर्गिकमन्दहास्यं　कृपापाङ्गतरङ्गिणम्।
तेजोमयं कृपासन्तं ध्यातुर्हृदयपङ्कजम्।। ३२।।
श्रीकृष्णहंसोऽनिरुद्धो निम्बार्कःपुरुषार्थवृट्।
सच्चिदानन्दात्मशुद्धो निरुपाधिसदर्थकृत्।। ३३।।
आधारो निगमोत्पादी निजैतिह्यप्रवर्त्तकः।
आद्याचार्य्यः सदाचार्य्यो मोक्षाधिकारधारकः।। ३४।।
सनकः सनत्कुमारः सनन्दनः सनातनः।
चतुस्सनश्चतुर्मूर्तिः कुमारः पञ्चहायनः।। ३५।।
असंसृतिः सारोद्धारी सदैकरसरूपधृक्।
कृतमोक्षाधिकाराढ्यः कृतस्मरणदायकः।। ३६।।
कृतसंसारविध्वंसी　ब्रह्माविर्भूतिरव्ययः।
ब्रह्मचर्य्याश्रमाधारो नैष्ठिकब्रह्मचर्य्यवान्।। ३७।।
ब्रह्मभूर्मानसो बालः सुसिद्धः सम्विदाकरः।
ऊर्द्धरेता ब्रह्मचारी निष्क्रियः समदर्शनः।। ३८।।
ब्रह्मज्ञो ब्रह्मदृग्ब्राह्मो ब्राह्मणो ब्रह्मवित्तमः।
निष्कलोऽविक्रियो विद्वान् सर्वज्ञः सर्वतत्त्ववित्।। ३९।।
अनिरुद्धोपदिष्टात्मा शान्तो दान्तो हरिप्रियः।
भक्तिरूपयोगदेष्टा　वैष्णवधर्मवित्तमः।। ४०।।

CC-0. In Public Domain. Digitized by Muthulakshmi Research Academy

अनादिरादिसन्धाता धर्मज्ञो धर्मतत्त्ववित्।
अर्थज्ञः संशयच्छेत्ता कृतध्यानोपदेशकः।। ४१ ।।
विश्वगुरुर्विश्वतारो विश्वाश्रयः समस्तवित्।
भावज्ञोऽनुभवो भावी प्रेमानन्दरसाश्रयः।। ४२ ।।
मोक्षधर्मा विमोक्षज्ञो मोक्षक्रियासमुत्सुकः।
अनिरुद्धोपदिष्टार्थप्रवृतिसतताग्रहः ।। ४३ ।।
नारदसमुपदेष्टा नारदहार्ददायकः।
आचार्य्यशेखरः स्वामी प्रेममूर्त्तिः कृपानिधिः।। ४४ ।।
सर्वाश्रमाङ्गसम्मिश्रो भिक्षुर्भिक्षाशनो यतिः।
योगी योगेश्वरो योग्यो भक्तियोगप्रवर्त्तकः।। ४५ ।।
महावीरो महावर्च्चा अनिरुद्धोक्तमन्त्रवित्।
वेदज्ञो वेदविख्यातो वेदहार्द्दविदाम्वरः।। ४६ ।।
वेदानुसारी वेदार्थो वेदवेदाङ्गपारगः।
वेदविधानसारज्ञो वेदान्तार्थप्रदर्शकः।। ४७ ।।
वेदेङ्गितरसास्वादी वेदान्तहार्द्दसारवित्।
निगमागमसारज्ञः सच्छास्त्रार्थप्रवर्तकः।। ४८ ।।
वेदतात्पर्य्यनिष्णातो वेदान्तानुविधायकः।
गुरुसेवी गुरूपासी गुरुधर्मोपदेशकः।। ४९ ।।

CC-0. In Public Domain. Digtized by Muthulakshmi Research Academy

वैकुण्ठदर्शक: सिद्धो वैकुण्ठान्तर्गत: शुभ:।
पार्षदेशावृत: श्रीमान् कक्षान्तसमवस्थित:।। ५०।।
पार्षदक्षुभित: शक्त: पार्षदशापदायक:।
विष्णुद्रष्टा विष्णुस्तोता विष्णुपादप्रणामकृत्।। ५१।।
श्रीकृष्णाङ्घ्रिप्रियागन्धपरिषिक्तरुडग्निक:।
तुलसीगन्धहृद्धारी बहुकालतपोन्वित:।। ५२।।
तुलसीवृन्दसन्धारस्तुलसीमालिकाकर: ।
वृंदावनसमाविष्टा[२] वृन्दायूथचरी सखी।। ५३।।
जटिलाजह्नुपूकाऽर्कधृता श्रीकृष्णवल्लभा।। ५४।।
राधाकृष्णरहस्यज्ञा राधाकृष्णपदाश्रया।
देवर्षिर्नारद: श्रीमानवधूत: सुविग्रह:।। ५५।।
ब्रह्मज्ञो ब्रह्मशापोक्त उदासीनो निराश्रय:।
कुमारोपकृतज्ञान: कुमारानुक्रियाधर:।। ५६।।
कुमारैतिह्यसन्ध्याता कुमारानुक्रियाकर:।
दक्षपुत्र: समुन्मोक्ता मुनीशो वाग्विदाम्वर:।। ५७।।
वीणापाणिर्महाभक्तो भक्तराज: सदुत्तम:।
कृष्णार्थकर्मसंस्कारी त्रेताशुभक्रियाकर:।। ५८।।

---

२. [illegible]

CC-0. In Public Domain. Digtized by Muthulakshmi Research Academy

कुमारादिष्टधर्म्मज्ञो गुरूक्तरीतिधारकः।
कृष्णार्पितमखः साधुः साधुधर्मपरायणः।। ५९ ।।
भक्तिरहस्यसंसक्तो रसशास्त्रप्रवर्तकः।
रसज्ञो रसिको रासी रसिकराड् रसायनः।। ६० ।।
निम्बादित्योपदेष्टा श्रीनिम्बादित्यरसप्रदः।
निम्बादित्यानुकम्पाम्भो निम्बादित्यहृदाश्रयः।। ६१ ।।
व्यासात्महितोपदेष्टा व्यासचित्तप्रतोषकः।
व्यासभाग्यो व्यासगुरुर्व्यासदेवसुपूजितः।। ६२ ।।
व्याससन्तापसंहर्ता व्यासतत्त्वोपदेशकः।
कुमारहार्द्दसम्वेत्ता कुमारादेशधारकः।। ६३ ।।
कुमारमार्गसन्निष्ठः कुमारशिष्यशेखरः।
वृन्दानुकम्पिता मुग्धा वृन्दायूथचरी शुभा।। ६४ ।।
राधाकृष्णानुवर्त्तिज्ञा राधाकृष्णानुरञ्जनी।
रसगानपरा सौम्या सुधासारानुगायिनी।। ६५ ।।
रसिका नायिका रम्या वेणुवाद्यविशारदा।
गुणवती गुणातीता गुणग्रामनिवासिनी।। ६६ ।।
सुदर्शनो महाबाहुः सूर्यकोटिसमप्रभः।
विशुद्धात्माखिलाधारो [illegible]।। ६७ ।।

CC-0. In Public Domain. Digtized by Muthulakshmi Research Academy

विश्वाधारोऽखिलाभासो विश्वरूप: सुधाकर:।
विश्वभावी जगद्बीजं स्वप्रकाश: प्रकाशकृत्।। ६८।।
शोभनो ज्योतिराकारो ज्योतिरूप: प्रकाशवान्।
दर्शनो दर्शको दर्शी दृश्यादृश्यस्वरूपक:।। ६९।।
अनादिरादिरात्मान्तर्हार्द्दभूतोऽखिलाकर: ।
जगद्धाता जगद्दर्शी जगज्ज्योतिस्तमोनुद:।। ७०।।
अन्तरूपो मनोवृत्ति: सङ्कल्प: सर्वसाधक:।
सुन्दर: सुन्दराकार: सुन्दरान्त: श्रियाचर:।। ७१।।
शुभाधार: शुभाभासी शुभदायी शुभङ्कर:।
सौभाग्यभगसम्पन्न: सौभाग्यदो भगान्वित:।। ७२।।
आदिहेतुर्जगद्धेतुर्ज्ञानहेतुर्मनोभव: ।
आत्माधारोऽखिलाभासो धराधारो धुरन्धर:।। ७३।।
महर्षिर्महानुभावो महानुभावभावित:।
सदा वित्ता सदाधार: सदाकार: सदाश्रय:।। ७४।।
वैष्णवो विष्णुसेवीशो विष्णुभाग्वैष्णवोत्तम:।
आचार्य्यमन्त्रसन्धाता मन्त्रव्याख्याविशारद:।। ७५।।
उपाङ्गवर्गसंसक्त: शयस्थ: शयशोभित:।
मुनिर्मानप्रशीलेशो मुनिवर्य्यो मुनीश्वर:।। ७६।।

CC-0. In Public Domain. Digitized by Muthulakshmi Research Academy

ज्येष्ठः श्रेष्ठः प्रजापालः प्रतापीशः प्रतापवान्।
करस्थितः शान्तिमूर्तिः पार्षदः पार्षदेश्वरः।। ७७।।
वैहायसो नभोगन्ता खेचरेन्द्रो विहङ्गमः।
अविहतगतिर्भर्गवत्सरापत्यगर्भपत् ।। ७८।।
लोकपो लोकसम्भेत्ता लोका लोकानुदर्शनः।
भक्तपो भक्तराजेन्द्रो भक्तप्रभाववर्द्धनः।। ७९।।
भावज्ञो भावनीयात्मा भक्तभावानुवर्तनः।
चक्रं चमत्क्रियायुक्तं चमत्कृतिहृतेक्षणम्।। ८०।।
कालचक्रं महाचक्रं चक्रवालं सुमण्डलम्।
प्रचण्डं चण्डदोर्दण्डं पाषण्डखण्डदारकम्।। ८१।।
लोकद्वारं महोदारं ज्योतिष्मच्च प्रभाकरम्।
उद्धृतासुरमर्चिष्मत्सहस्रचरणं चरम्।। ८२।।
पवित्रं विततं प्राणं प्रतत्पुराणमुत्तमम्।
सत्सोमाधारसन्दोहं दुष्टमोहदुरात्मभित्।। ८३।।
प्रसिद्धं वाङ्मयं शुद्धमङ्कनमरिलक्षणम्।
वेदगीतं विदाधारं ब्राह्मणं पापनाशनम्।। ८४।।
भ्राजमानं जगद्व्याप्यं जगद्विज्ञानभास्करम्।
साधु [illegible] ।। ८५।।

CC-0. In Public Domain. Digtized by Muthulakshmi Research Academy

पापकर्षं दुराधर्षमसदमर्षमिष्टिपम्।
अङ्गुलिस्थोऽनिरुद्धात्मा सङ्कल्पादिष्ट ऐश्वर:।। ८६।।
भागवतो हरिप्रेष्यो भागवतार्थतत्त्ववित्।
कृष्णसङ्कल्पमर्मज्ञो ब्रह्मसमाधिदीपक:।। ८७।।
ब्रह्मार्थित: प्रजादिष्ट: सब्राह्मणो मखागत:।
मखध्वंसकसंहर्त्ता मखकार्य्याभिवन्दित:।। ८८।।
हविर्द्धानो हविर्द्धाता हवि:सन्धानधारक:।
यज्ञपालो हविर्वर्द्धी नष्टयज्ञसमुद्धर:।। ८९।।
शुद्धिकारी प्रशुद्धात्मा नेम्यानिजो निजांशद:।
यज्ञपाता यज्ञभर्त्ता नेमिनिज: प्रयोजक:।। ९०।।
विप्रस्तुतो द्विजश्लाघ्यो विप्रसत्राभिरक्षक:।
अर्यन्तर्नरशरीर: प्रार्थितऋषिरूपधृक्।। ९१।।
ऋषिवर्य्य ऋषीशानो ब्रह्मर्षिर्ऋषिपालक:।
ब्रह्मवेत्ता सुब्रह्मज्ञो ब्रह्मण्यो ब्राह्मणार्थकृत्।। ९२।।
जयन्तीनन्दन: श्रीमान् विप्राशापरिपूरक:।
यज्ञविघ्न: तमोध्वंसी सवित्रात्मा सदर्थवृट्।। ९३।।
गौरमुखगृहीताङ्घ्री रक्षार्थधृतविग्रह:।
गोप्ता सद्धर्मसंस्थायी मानसो धर्म्म आत्मज:।। ९४।।

CC-0. In Public Domain. Digtized by Muthulakshmi Research Academy

सन्तानुकम्पी दयाध्वी: कृपालुर्दुष्टमर्द्दन:।
ईशसृष्टशस्त्रमस्त्रं विसर्ज्यो ब्रह्मरूपधृक्।। ९५।।
मनोमयो मनोभासो मन:सङ्कल्प इष्टद:।
नैमिशाख्यानसम्वर्ती नैमिशाख्यनिदानक:।। ९६।।
नैमिषारण्यसन्त्राता नैमिषारण्यपावन:।
नैमिषारण्यविख्यातो नैमिषखण्डसंस्तुत:।। ९७।।
सनम्रो नारदद्रष्टा नारदशिष्य इष्टभाक्।
नारदादिष्टसन्धर्त्ता नारदहार्द्दमर्मवित्।। ९८।।
तीर्थस्नायी पवित्रात्मा निसर्गदो निसर्गजित्।
वरो वरिष्ठो वरीयान् वरदाता वरार्चित:।। ९९।।
महान् महिष्ठो महीयान् महत्तेजो महत्तम:।
दोषहर्त्ता गुणद्रष्टा विपरीतमुदावह:।।१००।।
मखहर्त्ता मखत्राता मखधर्मसमर्पक:।
अमानी मानद: क्षन्ता मान्योऽभिमानवर्जित:।।१०१।।
सही सहिष्णु: सहीयान् सहिष्ठ: सङ्गवर्जक:।
धीर: प्रवीरो गम्भीर: शुण्डीरो धृतधैर्य्यक:।।१०२।।
सहायी व्यवसायज्ञो व्यवसायी सहायद:।
गुरुर्गरिष्ठो गरीयान् गुरूत्तरो गुरूत्तम:।।१०३।।

CC-0. In Public Domain. Digtized by Muthulakshmi Research Academy

मार्गी मार्गानुगो मार्गोपदेष्टा मार्गवित्तम:।
अजितो दिग्जयी जिष्णु: सर्वजेता ककुब्जयी॥१०४॥
मदनो मोददो मोदी मोदको मुक्ति ऋद्धमुत्।
पूजित: पूजक: पूजी पूजावित् पूज्यभाक्ध्रुव:॥१०५॥
ब्रह्मानन्दो निमानन्दो नियमानन्द इष्टद:।
सर्वाश्चर्य्यमयो धीमान् ब्राणावतेय आरुण:॥१०६॥
अगस्त्यशोकसंशोध अरुणिररुणोरुणि:।
ब्रह्मात्मज अजानन्दो नेमानन्दो नियामक:॥१०७॥
कवि: कवीश्वर: काव्यकर्त्ता काव्यविधायक:।
चतुर्व्यूहश्चतुर्मूर्तिश्चतुरूपश्चतुस्तनु: ॥ १०८॥
निम्बो निम्बी सुनिम्बादो निम्बभोजी सुनिम्बभुक्।
वाग्मी वागीश्वरो वक्ता वाचस्पतिरुदारधी:॥१०९॥
तर्त्ता तारयिता तीर्णस्तरदद्रिवहित्रवाट्।
पार: पारयिता पार: पारद: पूर्त्तिकृत्पर:॥११०॥
पूर: पूरयिता पूर: पूर्णबोधपुराणभृत्।
सम्पूर्ण: पूरक: पूरी पुरीस्थ: स्वपुरीश्वर:॥१११॥
सुमार्गो मार्गदो मार्गी मार्गानुवृत्तिद: सुधी:।
पर्वत: पर्वतोद्धर्त्ता गिरिरूप्यद्रितारक:॥११२॥

CC-0. In Public Domain. Digtized by Muthulakshmi Research Academy

वंशी वंशधरो वंशो वंशसन्धिकरो विभु:।
सूर्य्य: सूर्य्यायित: सूरिनियतिभोजनार्थक:।। ११३।।
भूमा भूयान् प्रभविष्णु: संहता पशुसञ्ज्ञक:।
पशुपाल: पशुद्रष्टा पशुहिंसानिवारक:।। ११४।।
शुद्धिद: शुद्धिसन्धायी शुद्धाचारप्रचारक:।
तीर्थाङ्गस्तीर्थदस्तीर्थी तीर्थपात् तीर्थशोधन:।। ११५।।
मुनिभोजी मुनिस्त्रायी मुनिमानी मुनीङ्गित:।
शास्त्रज्ञ: शास्त्रसम्वादी शास्त्रानुसारदीपक:।। ११६।।
धर्मज्ञो धर्मदो धर्मी धर्मदृग्धर्मसेवक:।
पावक: पावन: पावी पवित्राङ्ग: पवित्रकृत्।। ११७।।
मोक्षदो मोक्षको मोक्षी मोक्षकृद् मोक्षदायक:।
रमादृष्टो रमापृष्टो रमाहृष्टो रमार्थवित्।। ११८।।
रमातुष्टो रमापुष्टो रमाशेषान्नभोजित:।
रमाद्रष्टा प्रहृष्टाङ्गो हर्षवर्षी हृदाकुल:।। ११९।।
शेषभुक् शेषसम्भोक्ता हरिशेष्यवशेषय:।
पोषण: पोषक: पोषी पोषद: पुष्टिवर्द्धन:।। १२०।।
सुप्रसन्न: प्रसन्नात्मा प्रसादक: प्रसादवान्।
हरिध्यायी हरिध्याता हरिक्रियानुचिन्तक:।। १२१।।

CC-0. In Public Domain. Digtized by Muthulakshmi Research Academy

तोषकस्तोषदस्तोषी तोषणस्तोषधारणः।
कृष्णभाक् कृष्णसंसेवि कृष्णानुकम्पितः प्रभुः॥१२२॥
औदम्बरात्मसम्मोक्षी सारूप्यसुप्रदः कृती।
सुकृती सुकृताभिज्ञः सुकृतार्थी कृतार्थकृत्॥१२३॥
द्विजावेद्यो हितः सोढा गूढोऽनुग्राहको ग्रहः।
ग्रहीता ग्राहको ग्राही सङ्ग्रहणाग्रहोज्झितः॥१२४॥
आनन्दो नन्दनो नन्दो नन्दनन्दनचिन्तनः।
समानन्दः सदानन्दो निमानन्दः सुनन्दनः॥१२५॥
द्विजाभिप्रायमर्मज्ञो द्विजाभिशापमर्षकः।
मृत्यूपायौघसङ्ग्रासो मृत्युपापविवर्जितः॥१२६॥
अमृतो मारको मारी मारणो मृत्युघर्षणः।
पद्मनाभपदध्याता पद्मनाभहृदर्चितः॥१२७॥
पद्मनाभद्विजोज्जयी पद्मनाभद्विजार्थितः।
पद्मनाभद्विजार्थार्थी पद्मनाभाग्निशान्तिकृत्॥१२८॥
पद्मनाभद्विजादेष्टा भक्ततत्त्वोपदेशकः।
पद्मनाभान्नसम्भोजी शश्वत्सच्छेषभागकृत्॥१२९॥
पद्मनाभद्विजाज्ञायी पद्मनाभप्रसादकः।
पद्मनाभप्रसन्नात्मा पद्मनाभमनोहरः।

CC-0. In Public Domain. Digtized by Muthulakshmi Research Academy

द्विजाभिवन्दितपदः पद्मनाभद्विजस्तुतः।
पद्मनाभाङ्घ्रिसञ्चित्तः पद्मनाभस्तवस्मरः।। १३०।।
पद्मपत्रविशालाक्षः पद्मनाभस्तुतिकरः।
नैऋतश्रुतिनिष्टात्पगुच्चपातो वरार्थितः।। १३१।।
बुद्धाचारो विशुद्धेहो निगमार्थविशुद्धिकृत्।
द्वारकावासतत्त्वज्ञो द्वारकावाससंस्थितः।। १३२।।
वासुदेवाङ्घ्रिसंद्रष्टा वासुदेवप्रणामकृत्।
वासुदेवाङ्घ्रिनीराशी वासुदेवावशेषधृत्।। १३३।।
तप्तमुद्रासमुद्धर्ता तप्ताङ्कस्थापको गुरुः।
तप्तसंस्कारसन्धर्ता पाषण्डखण्डदण्डकृत्।। १३४।।
द्वारकाधामसङ्ग्राही तप्तमुद्रानिदेशकृत्।
सर्वाचार्य्यो महाचार्य्यः पतितोद्धारकारकः।। १३५।।
वासुदेवाङ्गसंस्तोता वासुदेवान्नसङ्ग्रहः।
वासुदेवप्रणीतात्मा वासुदेवानुगो नरः।। १३६।।
स्वधर्मस्थापकः स्थाता स्थायी स्थानकरो वृतः।
द्वारकास्वीकृतस्वामी द्वारकातापसंस्कृतिः।। १३७।।
तापनस्तापकस्तापी सुप्रतापी प्रतापवान्।
धारको धारणो धर्त्ता धारी धारणकृत् स्थिरः।। १३८।।

CC-0. In Public Domain. Digtized by Muthulakshmi Research Academy

सरिदुत्पादको नेता चेता चातुर्य्यवारिधिः।
कारकः कारणं कर्त्ता करणं कार्य्यकृत् करः॥१३९॥
नदीकर्त्ता नदीवोढा नदीघर्ष्टा नदीश्वरः।
कोल्लूकल्लोलसंशोषी जैनजिज्जैनशिक्षकः॥१४०॥
जैनोच्चाटक उद्धर्त्ता जैनदारो जिनस्तुतः।
धर्षको धर्षणो धर्ष्टा धर्षी धर्षितजैनकः॥ १४१॥
कृष्णार्थी कृष्णसेवार्थः कार्ष्णिः कृष्णजनप्रियः।
निम्बग्रामकृतावासो निम्बक्वाथैकभोजनः॥१४२॥
निम्बाशो निम्बसम्भोक्ता निम्बग्रामनिवासकृत्।
निम्बाशनो निराहारो निम्बाहारो निराश्रयः॥१४३॥
निम्बसेवी निम्बनामा निम्बाशी निम्बभास्करः।
निम्बायान् निम्बनों निम्बी निम्बो निम्बप्रियोऽनघः॥१४४॥
निम्बेष्टो निम्बको निम्बो निम्बासो निम्बपाककृत्।
वर्षिष्णुर्वर्षणो वर्षी वर्षो वर्षाधरो वृषः॥ १४५॥
वर्षिष्ठो वर्षको वर्षी धर्षिष्णुर्धृष्टसूदनः।
वर्षीयान् कृष्णभक्तयोर्थो भक्तेशो भक्तवत्सलः।१४६॥
तपस्वी तापसस्तप्ता तपोनिष्ठस्तपोन्वितः।
वदरीदिङ् मदीचिह्नः पुरुषोत्तमवंशकः॥१४७॥

CC-0. In Public Domain. Digtized by Muthulakshmi Research Academy

सेतुदिगब्जनाभाङ्कश्चतुर्व्यूहधराङ्कक: ।
द्वारकातापसंस्कारो द्वारकातापसंस्क्रिय:।। १४८।।
सेविष्ट: सेचिन: सेक्ता सेचिष्णु: सिक्तवैभव:।
सेवीयान् सेचिक: सेची सेकाह्लादितसज्जन:।।१४९।।
शरण्य: शर्मद: श्रेयान् शरणागतसदाविता।
शक्य: शरणद: शक्तो महद्गतिर्महामुनि:।।१५०।।
विजेता विजयी ज्यायान् ज्येष्ठो भक्तयश:प्रद:।
अभक्तविप्रसन्दग्धा वैष्णवधर्मपालक:।। १५१।।
विशिष्ट: शिष्टकृच्छिष्टो निर्विशेषो विशेषवान्।
सुधाधार: सुधासार: सुधावृष्टिकरो धन:।।१५२।।
द्योतको द्योतनो द्योतिर्द्योतिष्णुर्द्योतितात्मक:।
द्योतीयान् करुणासिन्धुर्द्योतिष्टो द्युतिसत्तम:।।१५३।।
जीवीयान् जीवीनी जीवी जीविष्णुर्जीवनाश्रय:।
जीवेष्टो जीवको जीवो जीवधर्म्मविवर्जित:।।१५४।।
साधिष्ट: साधक: साधु: साधिष्णु: साधुसम्मत:।
साधीयान् साधुमार्गस्थ: साधुधर्मप्रवर्त्तक:।।१५५।।
राधाकृष्णसदाध्यायी राधाकृष्णानुरञ्जन:।
राधाकृष्णमनोधर्ता राधाकृष्णानुशीलन:।।१५६।।

CC-0. In Public Domain. Digtized by Muthulakshmi Research Academy

राधाकृष्णयुगाराधी राधाकृष्णप्रयोजकः।
माथुरो मथुराधारो मथुरावासतत्परः।। १५७।।
गोवर्द्धनपरिक्रामी गोवर्द्धनान्तिकस्थितः।
गोवर्द्धनसदाद्रष्टा राधाकुण्डाभिषेचकः।। १५८।।
चक्रतीर्थसदास्नायी मानसीस्नाननिष्ठितः।
बृहत्सानुपरिद्रष्टा राधाकृष्णानुदर्शकः।। १५९।।
नन्दग्रामसुसंस्थाता यशोदानन्ददर्शनः।
कीर्तिवृषभानुवपुर्द्दर्शी सुसूक्ष्मदृष्टिकृत्।। १६०।।
व्रजस्थतीर्थसंस्थाता व्रजस्थतीर्थधारणः।
व्रजस्थतीर्थसंस्नायी व्रजतीर्थानुरञ्जितः।। १६१।।
व्रजवासकृतोल्लासो व्रजवाससहोत्सुकः।
व्रजवासानुसारस्थो व्रजवासविशारदः।। १६२।।
वृन्दावनसदाद्रष्टा वृन्दावनाभिषज्जितः।
वृन्दावननिदानज्ञो वृन्दावननिवासकृत्।। १६३।।
वृन्दावनसदाचारी वृन्दावनकृतोत्सवः।
यमुनाकूलसंस्नातो यमुनाकलजापकृत्।। १६४।।

CC-0. In Public Domain. Digtized by Muthulakshmi Research Academy

व्रजवाससदास्थायी निम्बग्रामसदास्थितः।
राधाकृष्णयुगोपासी राधाकृष्णोपदेशकः।। १६५।।
वेदस्थो वेदसञ्ज्ञाता वेदवेदाङ्गपारगः।
वेदोक्तार्थानुसारस्थो वेदोक्तार्थानुसाधकः।। १६६।।
राधाकृष्णमनोभिज्ञो राधाकृष्णवशङ्करः।
राधाकृष्णहृदाविष्टो राधाकृष्णपदार्थितः।। १६७।।
विश्वरूपानुसन्दर्शी विश्वरूपप्रदर्शनः।
भूखण्डविग्रहस्थाता परिचर्य्याप्रवर्त्तकः।। १६८।।
अध्यक्षो द्वापराचार्य्यः परिचर्य्यात्ममोचकः।
परिचर्य्याविधानज्ञः परिचर्योपदेशकृत्।। १६९।।
हरिविग्रहसंस्थाता महीमण्डलपूजितः।
अखण्डमण्डलाचार्यः पाषण्डखण्डदूषणः।। १७०।।
गौरमुखाशयत्रायी नरहर्प्युपमाचरः।
गवेषिता सुरोद्धर्ता जामदाग्न्योपमाधरः।। १७१।।
ब्रह्माण्डखण्डसङ्घोष्टा पाषण्डाङ्गविडम्बनः।
विघ्ननिर्विघ्नतो भ्राता कृष्णनामोपमाकरः।। १७२।।

CC-0. In Public Domain. Digtized by Muthulakshmi Research Academy

मज्जज्जनोपरिष्ठाता भूशैलोद्धारसन्निभ:।
जलस्थलैक्यसम्भावी वटपत्रशयोपम:।।१७३।।
निर्वंशवंशतादाता महर्षितुलनाधर:।
नक्तन्दिनानुसन्धायी कृष्णाङ्घ्रिनखरोपम:।।१७४।।
भागवतोपमाभाव: कारुण्यकरुणाकर:।
व्राणावत्यम्बुसंशोध: शबरीतुलनाधर:।।१७५।।
कृष्णरामोपमाभाव औदुम्बरात्ममुक्तिद:।
चतुर्व्यूहावतारीशो व्रजनाथात्मजोपम:।।१७६।।
ब्रह्मेन्द्रादिकसङ्काश: पद्मनाभसुशामक:।
विमुखश्रुतिसम्मोक्षा बुद्धीशादृश्यभासक:।।१७७।।
द्वारकाधर्म्मसंस्थापी कल्किसादृश्यसूचक:।
कोल्लूनदीसमुत्पादी वामनस्तुलनाधर:।।१७८।।
विश्वरूपात्मसम्भावी कृष्णानुभावभावक:।
सुदर्शनसंहिताकृत् सुदर्शनागमानुवृत्।।१७९।।
सुदर्शनकल्पोद्धारी सुदर्शी च शुभार्थकृत्।
श्री[illegible]भासक: ।।१८०।।

CC-0. In Public Domain. Digtized by Muthulakshmi Research Academy

श्रीनिवासशिष्यसेक्ता कलिनिस्तारदर्शकः।
अनेकभक्तसंराध्यः सत्सेविताङ्घ्रिपल्लवः।। १८१ ।।
तुलसीमालिकाधारी तुलसीवृन्दसेचनः।
तुलसीसौरभघ्राता तुलसीवनसंश्रयः।। १८२ ।।
तुलसीदलकृष्णार्च्ची तुलसीमञ्जरीष्टकृत्।
आद्याचार्य्यवराकारो निम्बग्रामसदास्थितः।। १८३ ।।
रङ्गारं गावती राङ्गा रङ्गदेव्यङ्कलेखनी।
अनुलेखक्रियाभिज्ञा चित्रकर्मविशारदा।। १८४ ।।
राधिकावामभागस्था राधिका प्रियकारिणी।
पद्मकिञ्जल्कवर्णाभा जपापुष्पाभवाससी।। १८५ ।।
सल्लक्षणायुता मध्या सिद्धिमुक्तिप्रकल्पिका।
शाश्वती श्रीमती सौम्या भागवती हरिप्रिया।। १८६ ।।
निम्बादित्यो निदानात्मा विभूत्यब्धिर्विभूतिभाक्।
कोल्लूनद्याजयोऽन्नाद्रिः शेषादिकद्विजान्वयः।। १८७।।
सर्ववेदान्तसन्धर्ता सर्वेषामुपकारकः।
सर्ववैष्णवसन्दोहो नैमिषारण्यविग्रहः।। १८८ ।।

CC-0. In Public Domain. Digtized by Muthulakshmi Research Academy

इति श्रीमत्सर्वाचार्य्यनामसाहस्रमीरितम्।
निम्बार्कनामसाहस्रं सम्पठन्निर्द्धनो धनी।। १८९।।
पुत्र्यपुत्र: पठन् स स्यान्निम्बार्काख्यसहस्रकम्।
कुष्ठ्यकुष्ट: पठन् स स्यान्निम्बार्काख्यसहस्रकम्।। १९०।।
ताप्यतापो वात्यवातो रोग्यरोगोऽज्वरो ज्वरी।
भोग्यभोग: पठन् स स्यान्निम्बार्काख्यसहस्रकम्।। १९१।।
सद्विद्यावानविद्य: स्यादज्ञानी ज्ञानवत्तम:।
अवैराग्यो विरागी स्यान्निम्बार्काख्यसहस्रकात्।। १९२।।
धर्मार्थी लभते धर्म्ममर्थार्थी चार्थमश्नुते।
कामार्थी लभते कामं मोक्षार्थी मोक्षमाप्नुयात्।। १९३।।
निम्बार्काख्यसहस्रं यो ह्येकदापि पठेन्नर:।
सर्वतीर्थानि संस्पृश्येद्भूपरि दक्षिणां चरेत्।। १९४।।
निम्बार्कनामसाहस्रं य: पठेद्वैष्णवो नर:।
सेवते सर्वक्षेत्राणि श्रीविग्रहांश्च पश्यति।। १९५।।
निम्बार्कनामसाहस्रं य: पठद्वैष्णवो नर:।
सर्वतीर्थौघं संस्पृर्शेद् भूपरिदक्षिणाफलम्।। १९६।।

CC-0. In Public Domain. Digtized by Muthulakshmi Research Academy

सर्वक्षेत्रनिवासे यत् कृष्णविग्रहदर्शने।
संकृत्सम्पठनात्तन्निम्बार्काख्यसहस्रकम्।। १९७।।
यज्ञकोटिफलं यायात् प्रणकोटिफलं चरेत्।
अन्नदानफलं ब्रूयान्निम्बार्काख्यसहस्रकम्।।१९८।।
फलं निगमपाठस्य पुराणपठनस्य यत्।
शास्त्रपाठस्य पठतां निम्बार्काख्यसहस्रकम्।।१९९।।
गोदानस्य च यत्पुण्यमश्वदानस्य यत्फलम्।
विद्यादानस्य यत्पुण्यं तत्फलं पठतां सकृत्।। २००।।
वैष्णवानां मनुष्याणां निम्बार्काख्यसहस्रकम्।
स्त्रीगोघ्नपितृहन्ता च राजघ्नो बालघातकः।। २०१।।
ब्रह्महा मद्यपः पापो मुच्यते सर्वपातकात्।
सम्पठेदेकदा वापि निम्बार्काख्य सहस्रकात्।। २०२।।
मा!नसं वाचिकं घोरं कायिकं पापसम्भवम्।
गुरुनिन्दोद्भवं पापं वेदब्राह्मणदोषजम्।। २०३।।
पठनात् क्षयमाप्नोति निम्बार्काख्यसहस्रकम्।
गुर्विणी सूयते पुत्रं कन्या सत्पतिमश्नुते।। २०४।।

CC-0. In Public Domain. Digtized by Muthulakshmi Research Academy

विधवा सद्गतिं याति जीवपति:सभर्तृका।
भवति सम्पठेत्सकृन्निम्बार्काख्यसहस्रकम्।। २०५।।
ब्राह्मणो लभते विद्यां क्षत्रियो जयमाप्नुयात्।
वैश्यो धनौघमायाति शुद्र आनन्दमश्नुते।। २०६।।
सम्पठेदेकदावापि निम्बार्काख्यसहस्रकम्।
निम्बार्कनामसाहस्रात् सम्पठिताच्छ्रुतादपि।। २०७।।
वश्यतां याति राजापि स्वल्पजीवस्य का कथा।
य: कोपि पठते वापि निम्बार्काख्यसहस्रकम्।। २०८।।
ज्ञानवैराग्यविद्यादेरञ्जसा फलमश्नुते।
निम्बार्कनामसाहस्रं निष्काम: पठते सकृत्।। २०९।।
अञ्जसा भक्तिमाप्नोति राधाकृष्णप्रतोषणीम्।
कार्तिकस्नायिनां पुण्यं माघाभिषेचिनां फलम्।। २१०।।
वैशाखस्नायिनां पुण्यमेकादशिव्रते फलम्।
पठतां तत्सकृद्वापि निम्बार्काख्यसहस्रकं।। २११।।
मथुरावासिनां पुण्यं द्वारकावासिनां फलम्।
मायावासेन यत्पुण्यमयोध्यावासिनां फलम्।। २१२।।

CC-0. In Public Domain. Digtized by Muthulakshmi Research Academy

काशीवासेन यत्पुण्यं काञ्चिवासेन यत्फलम्।
अवन्तीवासिनां पुण्यं सप्तपुरीनिवासिनाम्।। २१३।।
सकृत्सम्पठतां तत्तन्निम्बार्काख्यसहस्रकम्।
वदरीनाथदृष्टौ यज्जगन्नाथावलोकने।। २१४।।
रामसेतुदृशःपुण्यं कुशस्थलीशदर्शने।
सकृत्सम्पठतां तत्तन्निम्बार्काख्यसहस्रकम्।।२१५।।
निम्बार्कनामसाहस्रं पठन् दिग्विजयं चरेत्।
शत्रवो भीतितः सर्वे नमन्ति ह्यग्रतः स्वयम्।। २१६।।
निम्बार्कनामसाहस्रपाठको वैष्णवाग्रतः।
भूतप्रेतपिशाचाश्च ब्रह्मराक्षसभैरवाः।। २१७।।
वैताला गुह्यकाश्चैव शाकिनीडाकिनीग्रहाः।
निम्बार्कतेजसा तप्ताः पलायन्ते दिशो दश।। २१८।।
निम्बार्कनामसाहस्रं पठिता कृष्णसेविना।
पापसङ्घा विलीयन्ते सूर्योदये तमो यथा।। २१९।।
निम्बार्कनामसाहस्रं पठतां हृदि चिन्ततां।
कार्यसिद्धिर्भवत्वग्रे साधितां निम्बभास्वता।। २२०।।

CC-0. In Public Domain. Digtized by Muthulakshmi Research Academy

निम्बार्कनामसाहस्रपाठे निम्बार्कसेविनाम्।
सर्वसाधनहीनानां प्रेमभक्तिः सुसिद्ध्यति।। २२१ ।।
स्वर्णस्तेय्यनृतोद्वाची सर्वापराधदूषितः।
शुद्ध्यति सम्पठन्नेव निम्बार्काख्यसहस्रकम्।। २२२ ।।
निम्बार्कनामसाहस्रपाठादृते तु वैष्णवः।
निम्बार्कैतिह्यहीनो वै सञ्ज्ञेयो वैष्णवाधमः।। २२३ ।।
रङ्गदेव्यननुवृत्त्या सखीभावो न सिद्ध्यति।
निम्बार्कनामसाहस्रपाठादेव तु वैष्णवः।। २२४।।
अधीताः श्रुतयः साङ्गाः शास्त्रपुराणसंहिताः।
यः पठितं श्रुतं वापि निम्बार्काख्यसहस्रकम्।। २२५।।
बहुधा साधितैर्मन्त्रैः साधकानां तु यत्फलम्।
यच्छति पठितं तत्तन्निम्बार्काख्यसहस्रकम्।। २२६ ।।
नीचाय दुर्विनीताय हिंस्राय दोषदर्शिने।
गुरुभक्तिविहीनाय परदाररताय च।। २२७।।
पञ्चसंस्कारहीनाय दुराचाराय पापिने।
शठाय परशिष्याय नास्तिकायात्मघातिने।। २२८ ।।

CC-0. In Public Domain. Digtized by Muthulakshmi Research Academy

निम्बादित्याङ्घ्रिहीनाय सम्प्रदायिविवर्जिने।
न देयं नैव देयं वै निम्बार्काख्यसहस्रकम्।। २२९।।
देयं शान्ताय श्रद्धाय सम्प्रदायरताय च।
राधाकृष्णोपसन्नाय गुरुभक्तिपराय च।। २३०।।
निम्बादित्याङ्घ्रिभक्ताय निम्बादित्योक्तवेदिने।
पञ्चसंस्कारयुक्ताय तुलसीमालिने तथा।। २३१।।
जितक्रोधाय नम्राय शुद्धाचारयुताय च।
शिष्याय साधुभक्ताय स्वच्छान्तःकरणाय च।। २३२।।
नित्यपूजारतार्थाय निम्बार्काख्यसहस्रकम्।
ब्राह्मणाय न देयं वैविष्णुभक्तिविदूषिणे।। २३३।।
श्वपचाय सदा देयं कृष्णभक्तिरताय च।
निम्बार्कनामसाहस्रं न पठेत्संस्कृतोपि यः।। २३४।।
कथं स वैष्णवो ज्ञेयो निम्बार्कसाम्प्रदायकः।
निम्बार्कभक्तिहीनो यः श्वपचादधिको हि सः।। २३५।।
निम्बार्कनामसाहस्राद्दृते वै वैष्णवस्य तु।
सिद्ध्यति मन्त्रराजो न कल्पकोटिशतैरपि।। २३६।।

CC-0. In Public Domain. Digtized by Muthulakshmi Research Academy

तुलसीमन्दिरे तीर्थे गोपालमूर्त्तिसन्निधौ।
स्वसम्प्रदायके साधौ निरुपद्रवसंस्थितौ।। २३७।।
निम्बार्कनामसाहस्रं सम्पठेद्वैष्णव: सदा।
निम्बार्कनामसाहस्रं पठतां सततं सतां।। २३८।।
राधाकृष्णावविरस्तिभवत्यत्र न संशय:।
निम्बार्कनामसाहस्रं पठतां महतां सताम्।। २३९।।
विघ्ना नैव भविष्यन्त्यकालमृत्युभयादिका।
सत्यं सत्यं पुन: सत्यं श्रीनिम्बार्कप्रसादत:।। २४०।।
जयतु जयतु निम्बार्कोऽनिरुद्धो गरिष्ठो,
जयतु जयतु कार्ष्णि: श्रीकुमारो महिष्ठ:।
जयतु जयतु देवर्षिर्महार्हो वरिष्ठो,
जयतु जयतु निम्बादित्यसञ्ज्ञाधरिष्ठ:।। २४१।।
जयतु जयतु सिद्ध: श्रीनिवासो बलिष्ठो,
जयतु जयतु राधाकृष्णयुग्मं विशिष्टम्।
जयतु जयतु वृन्दारण्यसञ्ज्ञासुकीर्त्ति:,
सुमधुरसरसावृन्दासखीयूथमुख्या ।। २४२।।

CC-0. In Public Domain. Digtized by Muthulakshmi Research Academy

जयतु च जटिलाद्या साधियुग्मा क्रियाधा,
जयतु जयतु मुग्धा जानती गीतभेदान्।
जयतु जयतु मुख्या रङ्गदेवी सुमध्या,
जयतु जयतु गम्भीरा सुदेवैकनिष्ठा।। २४३।।

अरिवरमवतीर्णं विष्णुहस्तस्थमेव,
हरिविधिकरपार्श्वे सेवितं विद्यमानम्।
व्रजपतिसुतयो: श्रीरङ्गदेव्याकृतिं च,
नमितमरमये निम्बार्कमाचार्य्यवर्यम्।। २४४।।

इति श्री श्रीनिम्बार्कसहस्रनामस्तोत्रं सम्पूर्णम्।।

## क्षमा प्रार्थना

यदक्षरं पदं भ्रष्टं मात्राहीनं च यद् भवेत्।
तत्सर्वं क्षम्यतां देव प्रसीद परमेश्वर।।

।। श्रीनिम्बार्कार्पणमस्तु।।





CC-0. In Public Domain. Digtized by Muthulakshmi Research Academy

• जो मनुष्य ईश्वर को छोड़कर दूसरे से स्नेह करता है वह क्या कभी सुखी हो सकता है?

• जो मनुष्य यह चाहता है कि प्रभु सदा मेरे साथ रहें, उसे सत्य का ही सेवन करना चाहिए। भगवान् कहते हैं कि मैं केवल सत्यप्रिय लोगोंके ही साथ रहता हूँ।

• दया, नम्रता, दीनता, क्षमा, शील और सन्तोष—इन छः को धारण करके जो भगवान् को स्मरण करता है वह निश्चय ही मोक्ष पाता है।

• उस विश्वास को लाओ जो ध्रुव में, प्रह्लाद में और नामदेव में आया था, इसी विश्वास की बदौलत सम्पूर्ण शङ्का, सन्देह और झगड़े दूर हो जाते हैं।

• विद्या के समान संसारमें कोई नेत्र नहीं है, सत्यपालनके समान कोई तप नहीं है, रागके समान दुःखका कोई कारण नहीं है।

• दान, पश्चात्ताप, सन्तोष, संयम, दीनता, सत्य और दया—ये सात वैकुण्ठके द्वार हैं।

CC-0. In Public Domain. Digtized by Muthulakshmi Research Academy

## षोडशाक्षरी-युगलनाम-महामंत्र-संकीर्तन

राधे कृष्ण राधे कृष्ण कृष्ण कृष्ण राधे राधे।
राधे श्याम राधे श्याम श्याम श्याम राधे राधे।।
(कृपा करके अधिक से अधिक जप करें)



-: ग्रन्थ प्राप्ति स्थान :-

**श्री श्रीजी की बड़ी कुंज**

प्रताप बाजार, वृन्दावन

फोन : (0565) 443152

CC-0. In Public Domain. Digtized by Muthulakshmi Research Academy